# ॥ श्रीललिता त्रिशतीस्तोत्रम् ॥

## विषय सूचिका

# ॥ मङ्गळाचरणम् ॥

वन्दे विघ्नेश्वरं देवं सर्वसिद्धि प्रदायिनम्।

वामाङ्करूढ वामाक्षी करपल्लव पूजितम् ॥१॥

पाशाङ्कुशेक्षुसुमराजित पञ्चशाकां

पाटल्यशालिसुषुमाञ्चितगात्रवल्लीम्।

प्राचिनवक्स्तुतपदां परदेवतां त्वां

पञ्चायुधार्चितपदां प्रणमामि देवीम् ॥२॥

लोपामुद्रापतिं नत्वा हयग्रीवमपीश्वरम्

श्रीविद्याराज संसिद्धिकारि पङ्कजवीक्षणम् ॥३॥

( शाङ्कर भाष्यात् )

# ॥ गुरु ध्यानम् ॥



गुरुर्ब्रह्मा गुरुविष्णुः गुरुर्देवो महेश्वरः ।

गुरुस्साक्षात् परम् ब्रह्म तस्मै श्रीगुरवे नमः ॥

ज्ञानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।

आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥

गुरवे सर्वलोकानाम् भिषजे भवरोगिनाम् ।

निधये सर्वविद्यानाम् श्री दक्षिनामूर्तये नमः ॥

ॐ गुरुमूर्तये नमः ॥

# ॥ श्रीललिता त्रिशती पूर्व पीठिका ॥

अगस्त्य उवाच –

हयग्रीव दया सिन्धो भगवन् शिष्य वत्सल ।

त्वत्तः श्रुतमशेषेण श्रोतव्यं यद्यदस्तितत् ॥ १ ॥

रहस्य नाम साहस्रमपि त्वत्तः श्रुतं मय ।

इतः परं मे नास्त्येव श्रोतव्यमिति निश्चयः ॥ २ ॥

तथापि मम चित्तस्य पर्याप्तिर्नैव जायते।

कार्त्स्न्यार्थः प्राप्य इत्येव शोचयिष्याम्यहं प्रभो ॥ ३ ॥

किमिदं कारणं ब्रूहि ज्ञातव्यांशोऽस्ति वा पुनः ।

अस्ति चेन्मम तद्ब्रूहि ब्रूहीत्युक्त्वा प्रणम्य तम् ॥ ४ ॥

सूत उवाच –

समाललंबे तत्पाद युगळं कलशोद्भवः ।

हयाननो भीतभीतः किमिदं किमिदं त्विति ॥ ५ ॥

मुञ्चमुञ्चेति तं चोक्त्वा चिन्ताक्रान्तो बभूव सः ।

चिरं विचार्य निश्चिन्वन्  वक्तव्यं न मयेत्यसौ ॥ ६ ॥

तूष्णीं स्थितः स्मरन्नाज्ञां ललितांबाकृतां पुरा ।

प्रणम्य विप्रं  समुनिस्तत्पादावत्यजन्स्थितः ॥ ७ ॥

वर्षत्रयावधि तथा गुरुशिष्यौ तथा स्थितौ।

तच्छृंवन्तश्च पश्यंतः सर्वे लोकाः सुविस्मिताः ॥ ८ ॥

तत्र श्रीललितादेवी कामेश्वरसमन्विता ।

प्रादुर्भूय हयग्रीवं रहस्येवमचोदयत् ॥ ९ ॥

श्रीदेवी उवाच –

आश्वाननावयोः प्रीतिः शास्त्रविश्वासिनि त्वयि ।

राज्यं देयं शिरो देयं न देया शोडशाक्षरी ॥ १० ॥

स्वमातृज्जरवद्गोप्या विद्यैषत्यागमा जगुः ।

ततोऽतिगोपनिया मे सर्वपूर्तिकरी स्तुतिः ॥ ११ ॥

मया कामेश्वरेणापि कृता साङ्गोपिता भृशम् ।

मदाज्ञया वचोदेव्यश्चक्रुर्नामसहस्रकम् ॥ १२ ॥

आवाभ्यां कथिता मुख्या सर्वपूर्तिकरी स्तुतिः ।

सर्वक्रियाणां वैकल्यपूर्तिर्यज्जपतो भवेत् ॥ १३ ॥

सर्व पूर्तिकरं तस्मादिदं नाम कृतं मया ।

तद्ब्रूहि त्वमगस्त्याय पात्रमेव न संशयः ॥ १४ ॥

पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः ।

अयञ्च नितरां भक्तस्तस्मादस्य वदस्व तत् ॥ १५ ॥

अमुञ्चमानस्त्वद्द्वादौ वर्षत्रयमसौ स्थितः ।

एतज्ज्ञातुमतो भक्त्या हितमेव निदर्शनम् ॥ १६ ॥

चित्तपर्याप्तिरेतस्य नान्यथा संभविष्यती ।

सर्वपूर्तिकरं तस्मादनुज्ञातो मया वद ॥ १७ ॥

सूत उवाच –

इत्युक्त्वान्तरधदाम्बा कामेश्वरसमन्विता ।

अथोत्थाप्य हयग्रीवः पाणिभ्यां कुम्भसम्भवम् ॥ १८ ॥

संस्थाप्य निकटेवाच उवाच भृश विस्मितः ।

हयग्रीव उवाच –

कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव ॥ १९ ॥

त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये ।

एनागस्त्य स्वयं देवी तववक्तव्यमन्वशात् ॥ २० ॥

सच्छिष्येन त्वया चाहं दृष्टवानस्मि तां शिवाम् ।

यतन्ते दर्शनार्थाय ब्रह्मविष्णवीशपूर्वकाः ॥ २१ ॥

अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्थवम् ।

यस्य स्मरण मात्रेण पर्याप्तिस्ते भवेद्धृदि ॥ २२ ॥

रहस्यनाम साहस्रादपि गुह्यतमं मुने ।

आवश्यकं ततोऽप्येतल्ललितां समुपासितुम् ॥ २३ ॥

तदहं संप्रवक्ष्यामि ललिताम्बानुशासनात् ।

श्रीमत्पञ्चदशाक्षर्याः कादिवर्णान्क्रामन् मुने ॥ २४ ॥

पृथग्विंशति नामानि कथितानि घटोद्भव ।

आहत्य नाम्नां त्रिशती सर्वसंपूर्तिकारणी ॥ २५॥

रहस्यादिरहस्यैषा गोपनीया प्रयत्नतः ।

तां शृणुष्व महाभाग सावधानेन चेतसा ॥ २६ ॥

केवलं नामबुद्धिस्ते न कार्य तेषु कुम्भज।

मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ॥ २७ ॥

तस्मादेकाग्रमनसा श्रोतव्यं च त्वया सदा ।

सूत उवाच –

इति युक्त्वा तं हयग्रीवः प्रोचे नामशतत्रयम् ॥ २८ ॥

॥ इति श्रीललिता त्रिशती स्तोत्र पूर्व पीठिका सम्पूर्णम् ।

# ॥ न्यासम् ॥

अस्य श्रीललितात्रिशती स्तोत्र महामन्त्रस्य । भगवान् हयग्रीव ऋषिः । अनुष्टुप् छन्दः । श्रीललितामहात्रिपुरसुन्दरी देवता । ऐं बीजम् । सौः शक्तिः । क्लीं कीलकम् । मम चतुर्विधफलपुरुषार्थे जपे (वा) परायणे विनियोगः।।

ऐं अङ्गुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां नमः । सौः मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः ।

क्लीं कनिष्ठिकाभ्यां नमः । सौः करतलकरपृष्ठाभ्यां नमः ॥

ऐं हृदयाय नमः । क्लीं शिरसे स्वाहा । सौः शिखायै वषट् । ऐं कवचाय हुं ।

क्लीं नेत्रत्रयाय वौषट् । सौः अस्त्राय फट् । भूर्भुवस्सुवर्मिति दिग्बन्धः ॥

# ॥ ध्यानम् ॥

अतिमधुरचापहस्तामपरिमितामोदसौभाग्याम् ।

अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥

॥ लं इत्यादि पञ्च पूजा ॥

लं पृथिव्यात्मिकायै श्रीललिताम्बिकायै गन्धं समर्पयामि ।

हं आकाशात्मिकायै श्रीललिताम्बिकायै पुष्पैः पूजयामि ।

यं वाय्वात्मिकायै श्रीललिताम्बिकायै धूपमाघ्रापयामि ।

रं वह्न्यात्मिकायै श्रीललिताम्बिकायै दीपं दर्शयामि ।

वं अमृतात्मिकायै श्रीललिताम्बिकायै अमृतं महानैवेद्यं निवेदयामि ।

सं सर्वात्मिकायै श्रीललिताम्बिकायै सर्वोपचारपूजां समर्पयामि ॥

# ॥ नामस्तोत्रम् ॥

॥ श्रीमद्वाग्भवकूटम् ॥

**क**

ककाररूपा कल्याणी कल्याणगुणशालिनी ।

कल्याणशैलनिलया कमनीया कलावती ॥ १ ॥

कमलाक्षी कल्मषघ्नी करुणामृतसागरा ।

कदम्बकाननावासा कदम्बकुसुमप्रिया ॥ २ ॥

कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा ।

कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटा ॥ ३ ॥

कलिदोषहरा कञ्जलोचना कम्रविग्रहा ।

कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा ॥ ४ ॥

**ए**

एकाररूपा चैकाक्षर्येकानेकाक्षराकृतिः ।

एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः ॥ ५ ॥

एवमित्यागमाबोध्या चैकभक्तिमदर्चिता ।

एकाग्रचित्तनिर्ध्याता चैषणारहिताद्दृता ॥ ६ ॥

एलासुगंधिचिकुरा चैनःकूटविनाशिनी ।

एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी ॥ ७ ॥

एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता ।

एधमानप्रभा चैजदनेजज्जगदीश्वरी ॥ ८ ॥

एकवीरदिसंसेव्या चैकप्राभवशालिनी ।

## ई

ईकाररूपा चेशित्री चेप्सितार्थप्रदायिनी ॥ ९ ॥

ईदृगित्यविनिर्देश्या चेश्वरत्वविधायिनी ।

ईशानादिब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा ॥ १० ॥

ईक्षित्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।

ईडिता चेश्वरार्धाङ्गशरीरेशाधिदेवता ॥ ११ ॥

ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी ।

ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी ॥ १२ ॥

ईहाविराहिता चेशशक्तिरीषत्स्मितानना ।

## ल

लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ॥ १३ ॥

लाकिनी ललनारूपा लसद्दाडिमपाटला ।

ललन्तिकालसत्फाला ललाटनयनार्चिता ॥ १४ ॥

लक्षणोज्ज्वलदिव्याङ्गी लक्षकोट्यण्डनायिका ।

लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः ॥ १५ ॥

ललामराजदलिका लम्बिमुक्तालताञ्चिता ।

लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥ १६ ॥

## ह्रीम्

ह्रींकाररूपा ह्रींकारनिलया ह्रींपदप्रिया ।

ह्रींकारबीजा ह्रींकारमन्त्रा ह्रींकारलक्षणा ॥ १७ ॥

ह्रींकारजपसुप्रीता ह्रींमती ह्रींविभूषणा ।

ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ॥ १८ ॥

ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका ।

ह्रींकारवेद्या ह्रींकारचिन्त्या ह्रीं ह्रींशरीरिणी ॥ १९ ॥

॥ मध्यकूटम् ॥

## ह

हकाररूपा हलधृत्पूजिता हरिणेक्षणा ।

हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता ॥ २० ॥

हयारूढासेवितांघ्रिर्हयमेधसमर्चिता ।

हर्यक्षवाहना हंसवाहना हतदानवा ॥ २१ ॥

हत्यादिपापशमनी हरिदश्वादिसेविता ।

हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ॥ २२ ॥

हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।

हरिकेशसखी हादिविद्या हालामदालसा ॥ २३ ॥

## स

सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला ।

सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातना ॥ २४ ॥

सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।

सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ॥ २५ ॥

सर्वाधारा सर्वगता सर्वावगुणवर्जिता ।

सर्वारुणा सर्वमाता सर्वभूषणभूषिता ॥ २६ ॥

## क

ककारार्था कालहन्त्री कामेशी कामितार्थदा ।

कामसञ्जीविनी कल्या कठिनस्तनमण्डला ॥ २७ ॥

करभोरुः कलानाथमुखी कचजिताम्भुदा ।

कटाक्षस्यन्दि करुणा कपालिप्राणनायिका ॥ २८ ॥

कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः ।

कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ॥ २९ ॥

कल्पवल्लीसमभुजा कस्तूरीतिलकाञ्चिता ।

## ह

हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला ॥ ३० ॥

हारहारिकुचाभोगा हाकिनी हल्यवर्जिता ।

हरित्पतिसमाराध्या हठात्कार हतासुरा ॥ ३१ ॥

हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा ।

हल्लीसलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ॥ ३२ ॥

हानोपादाननिर्मुक्ता हर्षिणीहरिसोदरी ।

हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ॥ ३३ ॥

हय्यङ्गवीनहृदया हरिगोपारुणांशुका ।

## ल

लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ॥ ३४ ॥

लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता ।

लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥ ३५ ॥

लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता ।

लभ्यतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥ ३६ ॥

लग्नचामरहस्तश्रीशारदापरिवीजिता ।

लज्जापदसमाराध्या लंपटा लकुलेश्वरी ॥ ३७ ॥

लब्धमाना लब्धरसा लब्धसंपत्समुन्नतिः ।

### ह्रीम्

ह्रींकारिणी ह्रींकारादिः ह्रींमध्या ह्रींशिखामणिः ॥ ३८ ॥

ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका ।

ह्रींकारभास्कररुचिर्ह्रींकारांभोदचञ्चला ॥ ३९ ॥

ह्रींकारकन्दाङ्कुरिका ह्रींकारैकपरायणा ।

ह्रींकारदीर्घिकाहंसी ह्रींकारोद्यान ॥ ४० ॥

ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी ।

ह्रींकारपञ्जरशुकी ह्रींकाराङ्गणदीपिका ॥ ४१ ॥

ह्रींकारकन्दरासिंही ह्रींकाराम्भोजभृङ्गिका ।

ह्रींकारसुमनोमाध्वी ह्रींकारतरुमंजरी ॥ ४२ ॥

॥ शक्तिकूटम्॥

## स

सकाराख्या समरसा सकलागमसंस्तुता ।

सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया ॥ ४३ ॥

सकला सच्चिदानन्दा साध्या सद्गतिदायिनी ।

सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥ ४४ ॥

सकालाधिष्ठानरूपा सत्यरूपा समाकृतिः ।

सर्वप्रपञ्चनिर्मात्री समनाधिकवर्जिता ॥ ४५ ॥

सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेश्वरी ।

## क

ककारिणी काव्यलोला कामेश्वरमनोहरा ॥ ४६ ॥

कामेश्वरप्रणानाडी कामेशोत्सङ्गवासिनी ।

कामेश्वरालिङ्गिताङ्गी कमेश्वरसुखप्रदा ॥ ४७ ॥

कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।

कामेश्वरतपःसिद्धिः कामेश्वरमनःप्रिया ॥ ४८ ॥

कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।

कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥ ४९ ॥

कामेश्वराह्लादकरी कामेश्वरमहेश्वरी ।

कामेश्वरी कामकोटिनिलया काङ्क्षितार्थदा ॥ ५० ॥

## ल

लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।

लब्धपापमनोदूरा लब्धाहंकारदुर्गमा ॥ ५१ ॥

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः ।

लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ॥ ५२ ॥

लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।

लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः ॥ ५३ ॥

लब्धभोगा लब्धसुखा लब्धहर्षाभिपूजिता ।

## ह्रीम्

ह्रींकारमूर्तिर्ह्रींकारसौधशृङ्गकपोतिका ॥ ५४ ॥

ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा ।

ह्रींकारमणिदीपार्चिर्ह्रींकारतरुशारिका ॥ ५५ ॥

ह्रींकारपेटकमणिर्ह्रींकारदर्शबिम्बिता ।

ह्रींकारकोशासिलता ह्रींकारास्थाननर्तकी ॥ ५६ ॥

ह्रींकारशुक्तिकामुक्तामणिर्ह्रींकारबोधिता ।

ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिका ॥ ५७ ॥

ह्रींकारवेदोपनिषद् ह्रींकाराध्वरदक्षिणा ।

ह्रींकारनन्दनाराम नवकल्पकवल्लरी ॥ ५८ ॥

ह्रींकारहिमवद्गङ्गा ह्रींकारार्णवकौस्तुभा ।

ह्रींकारमन्त्रसर्वस्वा ह्रींकारपरसौख्यदा ॥ ५९ ॥

# ॥ नामवळिः ॥

वाग्भवकूटम् - क

१) ककाररूपायै

२) कल्याण्यै

३) कल्याणगुणसालिन्यै

४) कल्याणशैलनिलयायै

५) कमनीयायै

६) कलावत्यै

७) कमलाक्ष्यै

८) कल्मषघ्न्यै

९) करुणमृतसागरायै

१०) कदम्बकानानावासायै

११) कदम्बकुसुमप्रियायै

१२) कन्दर्पविद्यायै

१३) कन्दर्पजनकापाङ्गवीक्षणायै

१४) कर्पूरवीटीसौरभ्यकल्लोलित-
ककुप्तटायै

१५) कलिदोषहरायै

१६) कञ्जलोचनायै

१७) कम्रविग्रहायै

१८) कर्मादिसाक्षिण्यै

१९) कारयित्र्यै

२०) कर्मफलप्रदायै

वाग्भवकूटम् - ए

२१) एकाररूपायै

२२) एकाक्षर्यै

२३) एकानेकाक्षराकृत्यै

२४) एतत्तदित्यनिर्देश्यायै

२५) एकानन्दचिदाकृत्यै

२६) एवमित्यागमाबोध्यायै

२७) एकभक्तिमदर्चितायै

२८) एकाग्रचितनिर्ध्यातायै

२९) एषणारहितादृतायै

३०) एलासुगन्धिचिकुरायै

३१) एनकूटविनाशिन्यै

३२) एकभोगायै

३३) एकरसायै

३४) एकैश्वर्यप्रदायिन्यै

३५) एकातपत्रसाम्राज्यप्रदायै

३६) एकान्तपूजितायै

३७) एधमानप्रभायै

३८) एजदनेजज्जगदीश्वर्यै

३९) एकवीरादिसंसेव्यायै

४०) एकप्राभवशालिन्यै

वाग्भवकूटम् - ई

४१) ईकाररूपायै

४२) ईशित्र्यै

४३) ईप्सितार्थप्रदायिन्यै

४४) ईदृगित्याविनिर्देश्यायै

४५) ईश्वरत्वविधायिन्यै

४६) ईशानादिब्रह्ममय्यै

४७) ईशित्वाद्यष्टसिद्धिदायै

४८) ईक्षित्र्यै

४९) ईक्षणसृष्टाण्डकोट्यै

५०) ईश्वरवल्लभायै

५१) ईडितायै

५२) ईश्वरार्धाङ्गशरीरायै

५३) ईशाधिदेवतायै

५४) ईश्वरप्रेरणकर्यै

५५) ईशताण्डवसाक्षिण्यै

५६) ईश्वरोत्सङ्गनिलयायै

५७) ईतिबाधाविनाशिन्यै

५८) ईहाविरहितायै

५९) ईशशक्त्यै

६०) ईषत्स्मिताननायै

वाग्भवकूटम् - ल

६१) लकाररूपायै

६२) ललितायै

६३) लक्ष्मीवाणीनिषेवितायै

६४) लाकिन्यै

६५) ललनारूपायै

६६) लसद्दाडिमपाटलायै

६७) ललन्तिकालसत्फालायै

६८) ललाटनयनार्चितायै

६९) लक्षणोज्ज्वलदिव्याङ्ग्यै

७०) लक्षकोट्यण्डनायिकायै

७१) लक्ष्यार्थायै

७२) लक्षणागम्यायै

७३) लब्धकामायै

७४) लतातनवे

७५) ललामराजदलिकायै

७६) लम्बिमुक्तालताञ्चितायै

७७) लम्बोदरप्रसवे

७८) लभ्यायै

७९) लज्जाढ्यायै

८०) लयवर्जितायै

वाग्भवकूटम् - ह्रीम्

८१) ह्रींकाररूपायै

८२) ह्रींकारनिलयायै

८३) ह्रींपदप्रियायै

८४) ह्रींकारबीजायै

८५) ह्रींकारमन्त्रायै

८६) ह्रींकारलक्षणायै

८७) ह्रींकारजपसुप्रीतायै

८८) ह्रींमत्यै

८९) ह्रींविभूषणायै

९०) ह्रींशीलायै

९१) ह्रींपदाराध्यायै

९२) ह्रींगर्भायै

९३) ह्रींपदाभिधायै

९४) ह्रींकारवाच्यायै

९५) ह्रींकारपूज्यायै

९६) ह्रींकारपीठिकायै

९७) ह्रींकारवेद्यायै

९८) ह्रींकारचिन्त्यायै

९९) ह्रीं

१००) ह्रींशरीरिण्यै

मध्यकूटम् - ह

१०१) हकाररूपायै

१०२) हलधृत्पूजितायै

१०३) हरिणेक्षणायै

१०४) हरप्रियायै

१०५) हराराध्यायै

१०६) हरिब्रह्मेन्द्रवन्दितायै

१०७) हयारूढासेविताङ्घ्र्यै

१०८) हयमेधसमर्चितायै

१०९) हर्यक्षवाहनायै

११०) हंसवाहनायै

१११) हतदानवायै

११२) हत्त्यादिपापशमन्यै

११३) हरिदश्वादिसेवितायै

११४) हस्तिकुम्भोत्तुङ्गकुचायै

११५) हस्तिकृत्तिप्रियाङ्गनायै

११६) हरिद्राकुङ्कुमादिग्धायै

११७) हर्यश्वाद्यमरार्चितायै

११८) हरिकेशसख्यै

११९) हादिविद्यायै

१२०) हालामदालसायै

मध्यकूटम् - स

१२१) सकाररूपायै

१२२) सर्वज्ञायै

१२३) सर्वेश्यै

१२४) सर्वमङ्गलायै

१२५) सर्वकर्त्र्यै

१२६)  सर्वभर्त्र्यै

१२७)  सर्वहंत्र्यै

१२८)  सनातन्यै

१२९)  सर्वानवद्यायै

१३०)  सर्वाङ्गसुन्दर्यै

१३१)  सर्वसाक्षिन्यै

१३२)  सर्वात्मिकायै

१३३)  सर्वसौख्यदात्र्यै

१३४)  सर्वविमोहिन्यै

१३५)  सर्वाधारायै

१३६)  सर्वगतायै

१३७)  सर्वावगुणवर्जितायै

१३८)  सर्वारुणायै

१३९)  सर्वमात्रे

१४०)  सर्वभुषणभुषितायै

मध्यकूटम् - क

१४१)  ककारार्थायै

१४२)  कालहन्त्र्यै

१४३)  कामेश्यै

१४४)  कामितार्थदायै

१४५)  कामसञ्जीविन्यै

१४६)  कल्यायै

१४७)  कठिनस्तनमण्डलायै

१४८)  करभोरवे

१४९)  कलानाथमुख्यै

१५०)  कचजिताम्बुदायै

१५१)  कटाक्षस्यन्दिकरुणायै

१५२)  कपालिप्राणनायिकायै

१५३)  कारुण्यविग्रहायै

१५४)  कान्तायै

१५५)  कान्तिधूतजपावल्यै

१५६)  कलालापायै

१५७)  कण्बुकण्ठ्यै

१५८)  करनिर्जितपल्लवायै

१५९)  कल्पवल्लीसमभुजायै

१६०) कस्तूरीतिलकांचितायै

मध्यकूटम् - ह

१६१) हकारार्थायै

१६२) हंसगत्यै

१६३) हाटकाभरणोज्ज्वलायै

१६४) हारहारिकुचाभोगायै

१६५) हाकिन्यै

१६६) हल्यवर्जितायै

१६७) हरित्पतिसमाराध्यायै

१६८) हटात्कारहतासुरायै

१६९) हर्षप्रदायै

१७०) हविर्भोक्त्र्यै

१७१) हार्दसन्तमसापहायै

१७२) हल्लीसलास्यसन्तुष्टायै

१७३) हंसमन्त्रार्थरूपिण्यै

१७४) हानोपादाननिर्मुक्तायै

१७५) हर्षिण्यै

१७६) हरिसोदर्यै

१७७) हाहाहूहूमुखस्तुत्यायै

१७८) हानिवृद्धिविवर्जितायै

१७९) हय्यङ्गवीनहृदयायै

१८०) हरिकोपारुणांशुकायै

मध्यकूटम् - ल

१८१) लकाराख्यायै

१८२) लथापुज्यायै

१८३) लयस्थित्युद्भवेश्वर्यै

१८४) लास्यदर्शनसन्तुष्टायै

१८५) लाभालाभविवर्जितायै

१८६) लङ्घ्येतराज्ञायै

१८७) लावण्यशालिन्यै

१८८) लघुसिद्धदायै

१८९) लाक्षारससवर्णाभायै

१९०) लक्ष्मणाग्रजपूजितायै

१९१) लभ्येतरायै

१९२) लब्धभक्तिसुलभायै

१९३) लाङ्गलायुधायै

१९४) लग्नचामरहस्त श्रीशारदा परिवीजितायै

१९५) लज्जापदसमाराध्यायै

१९६) लम्पटायै

१९७) लकुलेश्वर्यै

१९८) लब्धमानायै

१९९) लब्धरसायै

२००) लब्धसम्पत्समुन्नत्यै

मध्यकूटम् - ह्रीम्

२०१) ह्रींकारिण्यै

२०२) ह्रींकाराद्यायै

२०३) ह्रींमध्यायै

२०४) ह्रींशिखामणये

२०५) ह्रींकारकुण्डाग्निशिखायै

२०६) ह्रींकारशशिचन्द्रिकायै

२०७) ह्रींकारभास्कररुच्यै

२०८) ह्रींकाराम्भोदचञ्चलायै

२०९) ह्रीङ्कारकन्दाङ्कुरिकायै

२१०) ह्रीङ्कारैकपरायणायै

२११) ह्रींकारदीर्धिकाहंस्यै

२१२) ह्रींकारोद्यानकेकिन्यै

२१३) ह्रीङ्कारारण्यहरिण्यै

२१४) ह्रीङ्कारावालवल्लर्यै

२१५) ह्रीङ्कारपञ्जरशुक्यै

२१६) ह्रींकाराङ्गणदीपिकायै

२१७) ह्रीङ्कारकन्दरासिंह्यै

२१८) ह्रींकाराम्भोजभृङ्गिकायै

२१९) ह्रींकारसुमनोमाध्व्यै

२२०) ह्रीङ्कारतरुमञ्जर्यै

शक्तिकूटम् - स

२२१) सकाराख्यायै

२२२) समरसायै

२२३) सकलागमसंस्तुतायै

२२४) सर्ववेदान्त तात्पर्यभूम्यै

२२५) सदसदाश्रयायै

२२६) सकलायै

२२७) सच्चिनन्दायै

२२८) साध्यायै

२२९) सद्गतिदायिन्यै

२३०) सनकादिमुनिध्येयायै

२३१) सदाशिवकुटुम्बिन्यै

२३२) सकलाधिष्ठानरूपायै

२३३) सत्यरूपायै

२३४) समाकृत्यै

२३५) सर्वप्रपञ्चनिर्मात्र्यै

२३६) समानाधिकवर्जितायै

२३७) सर्वोत्तुङ्गायै

२३८) सङ्गहीनायै

२३९) सगुणायै

२४०) सकलेष्टदायै

शक्तिकूटम् - क

२४१) ककारिण्यै

२४२) काव्यलोलायै

२४३) कामेश्वरमनोहरायै

२४४) कामेश्वरप्राणनाड्यै

२४५) कामेशोत्सङ्गवासिन्यै

२४६) कामेश्वरालिङ्गिताङ्ग्यै

२४७) कामेश्वरसुखप्रदायै

२४८) कामेश्वरप्रणयिन्यै

२४९) कामेश्वरविलासिन्यै

२५०) कामेश्वरतपस्सिद्ध्यै

२५१) कामेश्वरमनःप्रियायै

२५२) कामेश्वरप्राणनाथायै

२५३) कामेश्वरविमोहिन्यै

२५४) कामेश्वरब्रह्मविद्यायै

२५५) कामेश्वरगृहेश्वर्यै

२५६) कामेश्वराह्लादकर्यै

२५७) कामेश्वरमहेश्वर्यै

२५८) कामेश्वर्यै

२५९) कामकोटिनिलयायै

२६०) कांक्षितार्थदायै

शक्तिकूटम् - ल

२६१) लकारिण्यै

२६२) लब्धरूपायै

२६३) लब्धधिये

२६४) लब्धवांछितायै

२६५) लब्धपापमनोदूरायै

२६६) लब्धाहंकारदुर्गमायै

२६७) लब्धशक्त्यै

२६८) लब्धदेहायै

२६९) लब्धैश्वर्यसमुन्नत्यै

२७०) लब्धबुद्धये

२७१) लब्धलीलायै

२७२) लब्धयौवनशालिन्यै

२७३) लब्धातिशयसर्वाङ्गसौन्दर्यायै

२७४) लब्धविभ्रमायै

२७५) लब्धरागायै

२७६) लब्धपत्यै

२७७) लब्धनानागमस्थित्यै

२७८) लब्धभोगायै

२७९) लब्धसुखायै

२८०) लब्धहर्षाभिपूरितायै

शक्तिकूटम् - ह्रीम्

२८१) ह्रींकारमूर्तये

२८२) ह्रींकारसौधशृङ्गकपोतिकायै

२८३) ह्रींकारदुग्धब्धिसुधायै

२८४) ह्रींकारकमलेन्दिरायै

२८५) ह्रींकरमणिदीपार्चिषे

२८६) ह्रींकारतरुशारिकायै

२८७) ह्रींकारपेटकमणये

२८८) ह्रींकारादर्शबिंबितायै

२८९) ह्रींकारकोशासिलतायै

२९०) ह्रींकारास्थाननर्तक्यै

२९१) ह्रींकारशुक्तिका मुक्तामणये

२९२) ह्रींकारबोधितायै

२९३) ह्रींकारमयसौवर्णस्तंभविद्रुम
पुत्रिकायै

२९४) ह्रींकारवेदोपनिषदे

२९५) ह्रींकाराध्वरदक्षिणायै

२९६) ह्रींकारनन्दनाराम
नवकल्पकवल्लर्यै

२९७) ह्रींकारहिमवद्गङ्गायै

२९८) ह्रींकारार्णवकौस्तुभायै

२९९) ह्रींकारमन्त्रसर्वस्वायै

३००) ह्रींकारपरसौख्यदायै

# ॥ श्रीललिता त्रिशती उत्तर पीठिका ॥

हयग्रीव उवाच –

इत्येवं ते मयाख्यातं देव्या नामशतत्रयम् ।

रहस्यातिरहस्यत्वाद्गोपनीयं त्वया मुने ॥ १ ॥

शिववर्णानि नामानि श्रीदेव्या कथितानि हि ।

शक्त्यक्षराणि नामानि कामेशकथितानि च ॥ २ ॥

उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै ।

तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु ॥ ३ ॥

नानेन सदृशं स्तोत्रं श्रीदेवी प्रीतिदायकम् ।

लोकत्रयेऽपि कल्याणं सम्भवेन्नात्र संशयः॥ ४ ॥

सूत उवाच –

इति हयमुखगीतं स्तोत्रराजं निशम्य

प्रगलित कलुषोऽभूच्चित्तपर्याप्तिमेत्य ।

निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तं

पुनरधिकरहस्यं ज्ञातुमेवं जगाद ॥ ५ ॥

अगस्त्य उवाच –

अश्वानन महाभाग रहस्यमपि मे वद ।

शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि ॥ ६ ॥

उभयोरपि वर्णानि कानि वा वद देशिक।

इति पृश्टः कुम्भजेन हयग्रीवोऽवदत्पुनः ॥ ७ ॥

हयग्रीव उवाच –

तव गोप्यं किमस्तीह साक्षादम्बानुशासनात् ।

इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज ॥ ८॥

एतद्विज्ञनमात्रेण श्रिविद्या सिद्धिदा भवेत् ।

कत्रयं हद्वयं चैव शैवो भागः प्रकीर्तितः ॥ ९ ॥

शक्त्यक्षराणि शेषाणि ह्रीङ्कार उभयात्मकः ।

एवं विभागमज्ञात्वा ये विद्याजपशालिनः ॥ १० ॥

न तेशां सिद्धिदा विद्या कल्पकोटिशतैरपि ।

चथुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ॥ ११ ॥

नव चक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ।

त्रिकोणमष्टकोनं च दशकोणद्वयं तथा ॥ १२ ॥

चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ।

बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ॥ १३ ॥

चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् ।

त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टदलाम्बुजम् ॥ १४ ॥

दशारयोः षोडशारं भूगृहं भुवनाश्रके ।

शैवानामपि शाक्तानां चक्राणां च परस्परं ॥ १५ ॥

अविनाभाव सम्बन्धं यो जानाति स चक्रवित् ।

त्रिकोणरूपिणि शक्तिर्बिन्दुरूपपरः शिवः ॥ १६ ॥

अविनाभावसम्बन्धं तस्माद्बिन्दुत्रिकोणयोः ।

एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत् ॥ १७ ॥

न तत्फलमवाप्नोति ललिताम्बा न तुष्यति ।

ये च जानन्ति लोकेऽस्मिन्श्रीविद्याचक्रवेदिनः ॥ १८ ॥

सामन्यवेदिनः सर्वे विशेषज्ञोऽतिदुर्लभः ।

स्वयं विद्या विशेषज्ञो विशेषज्ञं समर्चयेत् ॥ १९ ॥

तस्मैः देयं ततो ग्राह्यमशक्तस्तव्यदापयेत्।

अन्धम्तमः प्रविशन्ति येऽविद्यां समुपासते ॥ २० ॥

इति श्रुतिरपाहैतानविद्योपासकान्पुनः ।

विद्यान्योपासकानेव निन्दत्यारुणिकी श्रुतिः ॥ २१ ॥

अश्रुता सश्रुतासश्च यज्वानो येऽप्ययज्वनः ।

स्वर्यन्तो नापेक्षन्ते इन्द्रमग्निश्च ये विदुः ॥ २२ ॥

सिकता इव संयन्ति रश्मिभिः समुदीरिताः ।

अस्माल्लोकादमुष्माच्चेत्याह चारण्यक श्रुतिः ॥ २३ ॥

यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम्।

तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥ २४ ॥

इति मन्त्रेषु बहुधा विद्याया महिमोच्यते ।

मोक्षैकहेतुविद्या तु श्रीविद्या नात्र संशयः ॥ २५ ॥

न शिल्पदि ज्ञानयुक्ते विद्वच्छब्धः प्रयुज्यते ।

मोक्षैकहेतुविद्या सा श्रीविद्यैव न संशयः ॥ २६ ॥

तस्माद्विद्याविदेवात्र विद्वान्विद्वानितीर्यते ।

स्वयं विद्याविदे दद्यात्ख्यापयेत्तद्गुणान्सुधीः ॥ २७ ॥

स्वयंविद्यारहस्यज्ञो विद्यामाहात्म्यमवेद्यपि

विद्याविदं नार्चयेच्चेत्को वा तं पूजयेज्जनः ॥ २८ ॥

प्रसङ्गादिदमुक्तं ते प्रकृतं शृणु कुम्भज ।

यः कीर्तयेत्सकृभ्भक्त्या दिव्यनामशतत्रयम् ॥ २९ ॥

तस्य पुण्यमहं वक्ष्ये शृणु त्वं कुम्भसंभव ।

रहस्यनामसाहस्रपाठे यत्फलमीरितम् ॥ ३०॥

तत्फलं कोटिगुणितमेकनामजपाद्भवेत् ।

कामेश्वरीकामेशाभ्यां कृतं नामशतत्रयम् ॥ ३१ ॥

नान्येन तुलयेदेतत्स्तोत्रेणान्य कृतेन च ।

श्रियः परम्परा यस्य भावि वा चोत्तरोत्तरम् ॥ ३२ ॥

तेनैव लभ्यते चैतत्पश्चाच्छ्रेयः परीक्षयेत् ।

अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्णयते ॥ ३३ ॥

या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिःसृता ।

नित्यं षोडशसङ्ख्याकान्विप्रानादौ तु भोजयेत् ॥ ३४ ॥

अभ्यक्ताम्स्तिलतैलेन स्नातानुष्णेन वारिणा ।

अभ्यर्च्य गन्धपुष्पाद्यैः  कामेश्वर्यादिनामभिः ॥ ३५ ॥

सूपापूपैः शर्कराद्यैः  पायसैः फलसंयुतैः ।

विद्याविदो विशेषेण भोजयेत्षोडश द्विजान् ॥ ३६ ॥

एवं नित्यार्चनं कुर्यातादौ ब्राह्मण भोजनम् ।

त्रिशतीनामभिः पश्चाद्ब्राह्मणान्क्रमशोऽर्चयेत् ॥ ३७ ॥

तैलाभ्यङ्गातिकं दत्वा विभवे सति भक्तितः ।

शुक्लप्रतिपदारभ्य पौर्णमास्यवधि  क्रमात्  ॥ ३८ ॥

दिवसे दिवसे विप्रा भोज्या विम्शतीसङ्ख्या ।

दशभिः पञ्चभिर्वापि त्रीभिरेकनवा दिनैः ॥ ३९ ॥

त्रिंशत्षष्टिः शतं विप्राः  सम्भोज्यस्त्रिशतं क्रमात् ।

एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः ॥ ४० ॥

तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिराः ।

रहस्यनामसाहस्रभोजनेऽप्येवमेव हि ॥ ४१ ॥

आदौ नित्यबलिं कुर्यात्पश्चाद्ब्राह्मणभोजनम् ।

रहस्यनामसाहस्रमहिमा यो मयोदितः ॥ ४२ ॥

सशिकराणुरत्रैकनाम्नो महिमवारिधेः ।

वाग्देवीरचिते नामसाहस्रे यद्यदीरितम् ॥ ४३ ॥

तत्फलं कोटिगुणितं नाम्नोऽप्येकस्य कीर्तनात् ।

एतन्यैर्जपैः स्तोत्रैरर्चनैर्यत्फलं भवेत् ॥ ४४ ॥

तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् ।

वाग्देविरचितास्तोत्रे तादृशो महिमा यदि ॥ ४५  ॥

साक्षात्कामेशकामेशी कृतेऽस्मिन्गृह्यतामिति ।

सकृत्सङ्कीर्तनादेव नाम्नामस्मिञ्शतत्रये ॥ ४६ ॥

भवेच्चित्तस्य पर्याप्तिर्न्यूनमन्यानपेक्षिणी ।

न ज्ञातव्यमितोऽप्यन्यत्र जप्तव्यश्च कुम्भज ॥ ४७ ॥

यद्यत्साध्यतमं कार्यं तत्तदर्थमिदञ्जपेत् ।

तत्तत्फलमवाप्नोति पश्चात्कार्यं परीक्षयेत् ॥ ४८ ॥

ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते फलं ।

तत्सर्वं सिद्धयति क्षिप्रं  नामत्रिशतकीर्तनात् ॥ ४९॥

आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम् ।

विद्याप्रदं कीर्तिकरं सुखवित्वप्रदायकम्  ॥ ५० ॥

सर्वसम्पत्प्रदं सर्वभोगदं सर्वसौख्यदम् ।

सर्वाभिष्टप्रदं चैव देव्या नामशतत्रयम् ॥ ५१ ॥

एतज्जपपरो भूयान्नान्यदिच्छेत्कदाचन ।

एतत्कीर्तनसन्तुष्टा श्रीदेवी ललिताम्बिका ॥ ५२ ॥

भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवं ।

तस्मात्कुभोद्भवमुने कीर्तय त्वमिदम् सदा ॥ ५३ ॥

नापरं किञ्चिदपि ते बोद्धव्यं नावशिष्यते ।

इति ते कथितं स्तोत्रं ललिता प्रीतिदायकम् ॥ ५४ ॥

नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।

न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ॥ ५६ ॥

यो ब्रूयात्त्रिशतीं नाम्नां तस्यानर्थो महान्भवेत् ।

इत्याज्ञा शाङ्करी प्रोक्ता तस्माद्गोप्यमिदं त्वया ॥ ५७ ॥

ललिता प्रेरितेनैव मयोक्तम् स्तोत्रमुत्तमम् ।

रहस्यनामसाहस्रादपि गोप्यमिदं मुने ॥ ५८ ॥

सूत उवाच –

एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् ।

स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरी ॥

आनन्दलहरीमग्नमानसः समवर्तत ॥ ५९ ॥

॥ इति श्रीललितात्रिशतीस्तोत्रं सम्पूर्णम् ॥

<u>Credits</u>

- Transliteration:
  - Purva Pithika – Ravi Mayavaram
  - Stotram – Ramakrishnan Balasubramanian
  - Naamavali – Bala Vengadesan
  - Uttara Pithika – Saraswathy Mayavaram
- Typeset by Ravi Mayavaram using iTranslator 2003 and Chandas font.
- 